य सर्वभूतप्रशमे निविष्ट सयो मृदुर्मानकृन्मुद्धभाव ।
अतीव न ज्ञायते ज्ञातिमध्ये महामणिर्जात्य इव प्रसन्न ॥ ३८ ॥
य आत्मनाऽपत्रपते भृशं नर स सर्वलोकस्य गुरुर्भवत्युत ।
अनन्ततेजा सुमना समाहित स तेजसा सूर्य इवावभासते ॥ ३९

Mahabharata

---

## XVII

**King Harsha hearing of his father's illness**

अथ कदाचिद् राज्यवर्धन कवचधरमाहूय हूणान्हन्तु हरिणानि हरिणेश किशोरमपरिमितबलानुयात चिरन्तनैरमात्यै प्रधानैश्च मह सामन्ते कृत्वा माभिसारमुत्तरापथं प्राहिणोत् । प्रयात च देवो ह कतिचित्प्रयाणकानि तुरगैरनुवव्राज । प्रविष्टे च कैलासप्रभाभासि ककुभ भ्रातरि निवर्तमानो नवे वयसि वर्तमानो निर्झरसानुरोधी के सरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषु क्रीडामृगयया मृगै घ्नन कतिपयान्यहानि बहिरेव व्यलम्बत । चकार चाकर्णाकृष्टमाशु भक्त्वर्षी स्वर्णपीयोभिरिव दिवसैर्निस्तापान्यरण्यानि ।

एकदा तु विभावर्यास्तुरीये यामे प्रयुपस्येव स्वप्ने चटुलज्वाला जर्जरितमकठकुम दुर्निवारणदावदहनभुजा दह्यमान केसरिणमद्र क्षीत् । तस्मिन्नेव दावदहने समुत्सृज्य शावकानुद्दयामान पातयत सिंहीमपश्यत् । आसीच्चास्य चेतसि । लोहेभ्य कठिनतरा खलु स्नेहमया बन्धनपाशा । यत्तिर्यञ्चोऽप्येवमाचरन्तीति । प्रबुद्ध स्यास्य दक्षिणेतरमक्षि परस्पन्दे । गात्रेष्वकस्मादेव च वेपथुर्निपप्रथे निर्निमित्तमन्तर्धनस्थचाचचास्य हृदयम् । अकारणादेवाजायत गरी यसी दु खासिका । किमिदमिति समुत्पन्नविविधवितर्कनिगडितमति रपगतधृतिश्चिन्तयन्निवावदन स्तिमिततारकेण चक्षुषा समुद्वियमान स्वाप्कमस्थिरायतमिव धवार चकोरेक्षण क्षणधीर्णाम्। अह्नि च तस्मि

त्येनैव चेतसा चिक्रीड मृगयाम् । आरोहति च हरितहये मध्य-
न्दिनो भवनमागत्योभयतो मन्दं मन्दं वाह्यमानतनुतालवृन्तो वेत्रपट्टिकाम-
शयान सायक एव तस्था । अथ दूरादेव दीर्घाध्वगनार कुरङ्ग-
नामानमायातमद्राक्षीत् ।

दृष्ट्वा पूर्वनिमित्तपरम्पराविर्भूतभीतिरग्वियन हृदयेन । कुरङ्गकस्तु
प्रणाम समुपसृत्य प्रथममाननलग्न विषादमुपनिन्ये पश्चाल्लिखम् ।
च हर्ष स्वयमेवावाचयत् । लेखार्थेनैव च सह गृहीत्वा हृदयेन
पमभिन्नरूपोऽभ्यधात् । कुरङ्गक किं ममाद्य तातस्येति । स
चचक्षे देव दाहज्वरो महानिति । तच्चाकर्ण्य सहसैवास्य हृदय
ल । कृतमना अ चनयितुरायुष्कामोऽपरिमितमणिकनकरजतजा-
ामपरिबर्हमशेष ब्राह्मणसादकरोत् । समुत्तस्थौ चैवमचल त्वरया च
वमान परिबर्हकोपनीतमारुह्य तुरगमेकाक्यैव प्रतातु प्रावर्तत ।

Harshacharita

---

XVIII.

The Yaksha's message

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ १ ॥
भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितैरागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ २ ॥
इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैवम् ।

श्रोष्यत्स्वमात्परमरहिता सौम्य सीमतिनीनां
कांतोदंतं सुहृदुपनतं संगमार्त्किचिदून ॥ ३ ॥
तामायुष्मन्मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ ४ ॥
शद्वाख्येयं यदपि किल ते यः सखीनां पुरस्ता-
त्कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रांतः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कंठाविरचितपदं मन्मुखेनेदमाह ॥ ५ ॥
श्यामास्वंगं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हंतैकस्मिन्क्वचिदपि न ते चंडि सादृश्यमस्ति ॥ ६ ॥
त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्त्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतांतः ॥ ७ ॥
भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिंग्यंते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदंगमेभिस्तवेति ॥ ८ ॥
नन्वात्मानं बहु विगणयन्नात्मनैवावलंबे
तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ।
कस्यात्यंतं सुखमुपनतं दुःखमेकांततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ९ ॥

शापांतो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान्गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ १० ॥
एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ११ ॥
आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ १२ ॥
कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ १३ ॥
एतत्कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान्देशाञ्जलद विचर प्रावृषा संभृतश्री
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ १४ ॥

Meghaduta

## XIX

### A lover's tale

**मकरंदः** । कथितमवलोकितया मदनोद्यानं गतो माधव इति ।
भवतु तत्रैव गच्छामि । ( परिक्रम्यावलोक्य च ) दिष्ट्याय वयस्य
इत एवाभिवर्तते । ( निरूप्य । ) अस्य तु

गमनमलस शून्या दृष्टि शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथ वा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावा क्षिपन्ति च धीरताम् ॥ १ ॥

( ततः प्रविशति यथानिर्दिष्टो माधवः )

माधवः । ( स्वगतम् )

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य चेतः कथं कथमपि व्यपवर्तते मे ।
लज्जां विजित्य विनयं विनिवार्य धैर्यमुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ २ ॥

आश्चर्यम् । यद्विस्मयस्तिमितमस्तमितान्यभाव
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्संनिधौ तदधुना हृदयं मदीय
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ ३ ॥

मकरन्दः । सखे माधव इत इतः ।

माधवः । ( परिक्रम्य ) कथं प्रियवयस्यो मम मकरन्दः ।

मकरन्दः । ( उपसृत्य ) सखे माधव उल्बणतरस्तपति तपनस्तद-स्मिन्नुद्याने मुहूर्तमुपविशाव ।

माधवः । यदभिरुचितं वयस्याय ।

( इत्युभावुपविशतः )

मकरन्दः । तदस्य तावदुच्छ्वसितकुसुमकेसरकषायशीतलामोदवासितोद्यानस्य काञ्चनारपादपस्याधस्तादुपविशाव ।

( तथा कुरुतः । )

मकरन्दः । वयस्य माधव । अद्य किल मदनोद्यानयात्राप्रतिनिवृत्तमन्यादृशं भवन्तमवधारयामि । अपि नाम मनागवतीर्णोऽसि रतिरमणबाणगोचरम् ।

( माधवः सलज्जमधोमुखस्तिष्ठति । )

मकरन्द । ( विहस्य ) तस्मिन्ननतमुग्धमुखपुण्डरीके स्थितोऽसि । पश्य ।

अन्येषु जन्तुषु रजस्तमसावृतेषु
निश्वस्य धातरि समं परमेश्वरे च ।
सोयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथंचिदपह्नुतिर्भूत् ॥ ४ ॥

माधवः । वयस्य किं न कथयामि श्रूयताम् । गतोहमवलोकिता जनितकौतुकं कामदेवायतनम् । तत्र चेतस्ततः परिक्रम्यावलोक्य च परिश्रमाद्वकुलमुकुलावलीमनोहराभरणरमणीयस्याङ्गनभुवो बालबकुल स्यालवालपरिसरे स्थितः । तस्य च यदृच्छया निरन्तरनिपतितानि कुसुमान्यादाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवानस्मि । अनन्तरं च संचारिणीव देवस्य मकरकेतोर्जगद्विजयवैजयन्तिका निर्गत्य गर्भभवनाद्‌ नर्मविदग्धमुग्धवेषपथ्यविभावितकुमारीभावा महानुभाव प्रकृतिरत्युदारपरिजना कापि इत एवाभिगतवती । 3

सा रामणीयकनिधेरधिदेवता वा
सौंदर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे नियतमिन्दुसुधामृणाल
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ ५ ॥

अथ सा प्रणयिनीभिरनुचरीभिरविरलकुसुमसंचयावचयलीलादोह दिनीभिरभ्यर्थ्यमाना तमेव बकुलपादपोद्देशमागतवती । तस्याश्च कस्मिं श्चिदपि महाभागधेयजन्मनि बहुदिवसापचीयमानमिव मन्मथव्यथावि कारमुपलक्षितवानस्मि । सा पुनर्मम प्रथमदर्शनात्प्रभृत्यमृतवर्तिरिव चक्षुषोर्निरतिशयमानन्दमुत्पादयन्त्ययस्कान्तमणिशलाकेव लोहधातुमन्त करणमाकृष्टवती । किं बहुना ।

( प्रकाशम् । ) अपि वयस्येन निदिते तदन्वयनामनी ।

**माधवः ।** सखे श्रूयताम् । अथ तस्या करेणुकारोहणसमय एव महतः सखीकदम्बकादन्यतमा वारयोषिद्विलम्ब्य माळबकुलकुसुमावचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापीडव्याजेन मामेवमुक्तवती । महाभाग सुश्लिष्टगुणतया रमणीय एव व सुमनसा सनिवेश । कुतूहलिनी च नो भर्तृदारिका वर्तते । यस्या अभिनवो विचित्र कुसुमेषु व्यापार । तद्भवतु कृतार्थता वैदग्ध्यस्य । फलतु निर्माणरमणीयता विधातु । समासादयतु सरस एष भर्तृदारिकाया कण्ठावलम्बन महार्घतामिति ।

**मकरंदः ।** अहो वैदग्ध्यम् ।

**माधवः ।** तया च मदनुयुक्तया समाख्यातमियममात्यभूरिवसो प्रसूतिर्मालती नामाह च प्रसादभूमिर्भर्तृदारिकाया धात्रेयिका लवंगिका नामेति ।

**मकरंदः ।** अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य । अपि च मालती मालतीति मोदते भगवती कामदकी तां च किल राजा नदनाय प्रार्थयत इति किंवदन्ती श्रूयते ।

**माधव ।** तया चाहमनुरुध्यमानस्ता बकुलमालामात्मन कण्ठादवतार्य दत्तवान् । असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमविरचितैकभागां तामेव बहु मन्यमाना महानयं प्रसाद इति प्रतिगृहीतवती । अनतर च यात्राभङ्गप्रचलितस्य महत पौरजनस्य सकुलेन विघटितायां तस्यामागतोऽस्मि ।

*Málatimádhava I*

---

## XX.

### *An address to the Ganges.*

समृद्ध सौभाग्य सकलवसुधाया किमपि तन्
महैश्वर्य लीलाजनितजगत खंडपरशो ।

श्रुतीना सर्वस्व सुकृतमथ मूर्त सुमनसा
सुधासौन्दर्य ते सलिलमशिव न शमयतु ॥ १ ॥
दरिद्राणा दैन्य दुरितमथ दुर्वासनहृदा
द्रुत दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिम् ।
अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारा श्रियमयमपारा दिशतु न ॥ २ ॥
स्मृति याता पुसामकृतसुकृतानामपि च या
हरत्यन्तस्तन्द्रा तिमिरमिव चन्द्रांशुसरणि ।
इय सा ते मूर्ति सकलसुरससेव्यसलिला
ममान्तस्सन्ताप त्रिविधमपि पाप च हरताम् ॥ ३ ॥
तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीता सुरगणा ।
इदानीमौदास्य यदि भजसि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुर ॥ ४ ॥
अपि प्राज्य राज्य तृणमिव परित्यज्य सहसा
विलोलद्वानीर तव जननि तीर श्रितवताम् ।
सुधात स्वादीय सलिलमिदमातृप्ति पिबता
जनानामानन्द परिहसति निर्वाणपदवीम् ॥ ५ ॥
स्मृत सद्य स्वान्त विरचयति शान्त सकृदपि
प्रगीत यत्पाप झटिति भवताप च हरति ।
इद तद्गङ्गेति श्रवणरमणीय खलु पद
मम प्राणप्रान्ते वदनकमलान्तर्विलसतु ॥ ६ ॥
महादानैर्ध्यानैर्बहुविधवितानैरपि च यत्
न लभ्य घोराभि सुविमलतपोराजिभिरपि ।
अचिन्त्य तद्विष्णो पदमखिलसाधारणतया
ददाना केनासि त्वमिह तुलनीया कथय न ॥ ७ ॥

नृणामीक्षामात्रादपि परिहरन्त्या भवभयं
शिवायास्ते मूर्तेः क इह बहुमानं कथयतु ।
अमर्षम्लानायाः परममनुरोधं गिरिभुवो
विहाय श्रीकण्ठः शिरसि नियतं धारयति याम् ॥ ८ ॥

स्खलन्ती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः ॥ ९ ॥

जडानन्धान्पङ्गून्प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन् ।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपतितान्
नरानम्ब त्रातुं त्वमिह परमं भेषजमसि ॥ १० ॥

स्वनद्भुवनस्थानां झटिति सततमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्
नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥ ११ ॥

निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥ १२ ॥

समुत्पत्तिः पद्मारमणपदपद्मामलनखात्
निवासः कन्दर्पप्रतिभटजटाजूटभवने ।
अथायं व्यासङ्गो हतपतितनिस्तारणविधौ
न कस्मादुत्कर्षस्तव जननि जागर्ति जगतः ॥ १३ ॥

नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे ।

कथं वा श्रीभर्तुः पदकमलमक्षालि सलिलै-

स्तुलालेशो यस्यास्तव जननि दीयेत कविभिः ॥ १४ ॥

निवृत्ता निःशङ्कं निरवधिसमाधिं विधिरहो

सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।

कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः

सवित्री कामानां यदि जगति जागर्ति भवती ॥ १५ ॥

विलीनोऽयं वैवस्वतनगरकोलाहलभरो

गता दूता दूरं क्वचिदपि परेतान्मृगयितुम् ।

विमानानां व्रातो विदलयति वीथीर्दिविषदां

कथा ते कल्याणी यदवधि महीमण्डलमगात् ॥ १६ ॥

त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ

करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।

इमं तं मामम्ब त्वमियमनुकम्पार्द्रहृदया

पुनाना सर्वेषामघमथनदर्पं दलयसि ॥ १७ ॥

विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं

न याभ्यामालीढा परमरमणीया तव तनुः ।

अयं हि न्यक्कारो जननि मनुजस्य श्रवणयो-

र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥ १८ ॥

कियन्तः सन्त्येके नियतमिह लोकार्थघटकाः

परे पूतात्मानः कति च परलोकप्रणयिनः ।

सुखं शेते मातस्तव खलु कृपातः पुनरयं

जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः ॥ १९ ॥

भवत्या हि व्रात्याधमपतितपाखण्डपरिषत्-

परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा ।

ममाप्येवं प्रेमा दुरितनिवहेष्वम्ब जगति

स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥ २० ॥

प्रपद्यन्ते लोकाः कति न भवतीमत्रभवती-
मुपाधिस्तत्रायं स्फुरति यदभीष्टं वितरसि ।
शपे तुभ्यं मातर्मम तु पुनरात्मा सुरधुनि
स्वभावादेव त्वय्यमितमनुरागं विधृतवान् ॥ २१ ॥
नरान्मूढांस्तत्तज्जनपदसमासक्तमनसो
हसन्तः सोल्लासं विकचकुसुमव्रातमिषतः ।
पुनानाः सौरभ्यैः सततमलिनो नित्यमलिनान्
सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ॥ २२ ॥
यजन्त्येके देवान्कठिनतरसेवांस्तदपरे
वितानव्यासक्ता यमनियमरक्ताः कतिपये ।
अहं तु त्वन्नामस्मरणकृतकामस्त्रिपथगे
जगज्जालं जाने जननि तृणजालेन सदृशम् ॥ २३ ॥
विभूषितानङ्गरिपूत्तमाङ्गा सद्यः कृतानेकजनार्तिभङ्गा ।
मनोहरोत्तुङ्गचलत्तरङ्गा गङ्गा ममाङ्गान्यमलीकरोतु ॥ २४ ॥
इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् ।
यः पठेत्तस्य सर्वत्र जायन्ते सुखसम्पदः ॥ २५ ॥

Gangalahari

---

## XXI

### God is not open to the charges of injustice and cruelty

नेश्वरो जगतः कारणमुपपद्यते । कुतः । वैषम्यनैर्घृण्यप्रसङ्गात् ।
कांश्चिदत्यन्तसुखभाजः करोति देवादीन् । कांश्चिदत्यन्तदुःखभाजः करोति
पश्वादीन् । कांश्चिन्मध्यमभोगभाजो मनुष्यादीनिति । एवं विषमां
सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृ-
त्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत । यथा खलजनै

जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात् सर्वप्रजोपसंहरणाच्च प्रसज्येत । तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः कारणमित्येवं प्राप्ते ब्रूमः । वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते । कस्मात् । सापेक्षत्वात् । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च । न तु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते । किमपेक्षत इति चेद्धर्माधर्मावपेक्षत इति वदामः । अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः । यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति । एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति । देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति । एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति ।

Saṅkarabhāshya

---

## XXII

A poet's introduction to his poem

श्रीनाभि कुम्भोदरिपुश्पार्श्वे पञ्चचरित्रस्तुतिमातनोति ।
नीलोमरञ्जानरहस्यकाति न गेऽस्तु नूनं भगवान्मुकुन्दः ॥ १ ॥
साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ।
यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति ॥ २ ॥
गृह्णन्तु सर्वे यदि वा यथेष्टं नास्ति क्षतिः क्वापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥ ३ ॥
सहस्रशः सन्तु विशारदानां वैदर्भलीलानिधयः प्रबन्धाः ।
तथापि वैचित्र्यरहस्यलुब्धाः श्रद्धां विधास्यन्ति सचेतसोऽत्र ॥ ४ ॥
कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु ।

कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ ५ ॥
व्युत्पत्तिरावर्जितकोविदापि न रञ्जनाय क्रमते जडानाम् ।
न मौक्तिकच्छिद्रकरी शलाका प्रगल्भते कर्मणि टङ्किकायाः ॥ ६ ॥
कथासु ये लब्धरसाः कवीनां ते नानुरज्यन्ति कथान्तरेषु ।
न ग्रन्थिपर्णप्रणयाश्चरन्ति कस्तूरिकागन्धमृगास्तृणेषु ॥ ७ ॥
न दुर्जनानामिह कोपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः ।
द्वेष्यैव केषामपि चन्द्रखण्डविपाण्डुरा पुण्ड्रकशर्करापि ॥ ८ ॥
अलौकिकोल्लेखसमर्पणेन विदग्धचेतःकषपट्टिकासु ।
परीक्षितं काव्यसुवर्णमेतल्लोकस्य कण्ठाभरणत्वमेतु ॥ ९ ॥
किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण ।
किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ १० ॥
पृथ्वीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि ।
भूपाः कियन्तो न बभूवुरुर्व्यां जानाति नामापि न कोपि येषाम् ॥ ११ ॥
लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ १२ ॥
गिरां प्रवृत्तिर्मम नीरसापि मान्या भवित्री नृपतेश्चरित्रैः ।
के वा न शुश्रूषितुमाद्रियन्ते शिवस्य मूर्ध्नि धारयन्ति ॥ १३ ॥
कर्णामृतं सूक्तिरसं विमुच्य दोषे प्रयत्नः सुमहान्खलानाम् ।
निरीक्षते केलिवनं प्रविश्य क्रमेलकः कण्टकजालमेव ॥ १४ ॥
एतास्तु चाटुक्रमविभ्रमासमुद्राः गुणगौतिमानाम् ।
मद्वाक्सतागृनविरे ... कटनिकूपण च ॥ १५ ॥

Vikramankadevacharita I.

स्वाधीन शशिमालिचापविषये प्राप्तो न वै विक्रियां
पायाद्व स विभीषणाग्रजनिहा रामाभिधानो हरि ॥ १ ॥
नाय प्रयातिविकृतिं विरसो न य स्या-
न्न क्षीयते बहुजनैर्नितरा निपीत ।
जाड्य निहंति रुचिमेति करोति तृप्ति
नून सुभाषितरसोऽन्यरसातिशायी ॥ २ ॥
लौकिकाना हि साधूनामर्थं वागनुवर्तते ।
ऋषीणा पुनराद्याना वाचमर्थोऽनुधावति ॥ ३ ॥
यस्याश्चोरश्चिकुरनिकर कर्णपूरो मयूरो
भासो हास कविकुलगुरु कालिदासो विलास ।
हर्षो हर्षो हृदयवसति पचबाणस्तु बाण
केषा नैषा कथय कविताकामिनी कौतुकाय ॥ ४ ॥
गुणदोषौ बुधो गृह्णन्निदुक्ष्वेडाविवेश्वर ।
शिरसा श्लाघते पूर्वं पर कठे नियच्छति ॥ ५ ॥
पातितोऽपि कराघातैरुत्पतत्येव कदुक ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तय ॥ ६ ॥
किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुष प्रतिष्ठाम्
कुंभो न कूपमपि शोषयितु समर्थ
कुंभोद्भवेन मुनिनाम्बुनिधि पीत ॥ ७ ॥
असाधु साधुर्वा भवति खलु जात्यव पुरुषो
न सगाद्दौर्जन्य न हि सुजनता कस्यचिदपि ।
प्ररूढे ससर्गे मणिभुजगयोर्जन्मजनिते
मणिर्नाहेर्दोषान् स्पृशति न हि सर्पो मणिगुणान् ॥ ८ ॥
रास्यक चक्र सुनयगामिना सम तुरगा
निगलयो मार्गश्चरणरहित सारथिरपि ।

लङ्केश्वरो हरति दाशरथे: कळत्रं
प्राप्नोति बधमत्र दक्षिणसिन्धुराजः ॥ १६ ॥
आलस्य स्थिरतामुपैति भजते चापल्यमुद्योगिता
मूकत्वं मितभाषिता वितनुते मौग्ध्यं भवेदार्जवम् ।
पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मता
मातर्लक्ष्मि तव प्रमाददवशतो दोषा भवन्ती सद्गुणा ॥१७॥
पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन रोषा-
दाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी मे ।
गेहं मे छेदयति प्रतिदिनममुनाकान्तपूजानिमित्तं
तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥१८॥
आपद्गतं हससि किं द्रविणान्धमूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे
रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ १९ ॥
उड्डीना गुणपक्षिणः सुखफलान्याराद्विशीर्णान्यथ
पर्यस्ता परितो यशःस्तबकिता सपल्लतापल्लवा ।
प्रागेवापसृतप्रमोदहरिणच्छाया क्वचित्तु गता
दैन्यारण्यमतङ्गजेन महता भग्नेऽभिमानद्रुमे ॥ २० ॥
रत्ने त्वं मज्ज सिन्धौ गिरिवरशिखरे त्वं च तिष्ठ प्रतिष्ठे
शाते प्रीते दिशाते कुरु वसतिमहो गर्व खर्वीभवाशु ।
तेजः पातालमूलं भज मुनि भगवन्मान मा नाम तस्तु
प्रेम्णैकामाश्रयन्तीं सततमहमिमां तूर्णमाशां श्रयिष्ये ॥२१॥
सिद्धक्षुण्णाब्धिरौद्रभ्रमगलित रसाकाकुनाम्बर
कान्तारे यत्र रौद्रया दुग्धमगाद्विरस्य पत्नी मुदा ।
पाणिभ्यामवगृह्य शुष्ककठिनं तद्वीक्ष्य दूरे नहा
वक्त्राने पततामनीव मत्तामिन्मार्गो स्याद्गति ॥ २२ ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ता पुरा तेऽखिला
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुत ।
गन्तु पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापद
युक्त तेन जलेन शाम्यति सता मैत्री पुनस्त्वीदृशी ॥२३॥
यद्धात्रा निजभालपट्टलिखित स्तोक महद्वा धन
तत्प्राप्नोति मरुस्थलेऽपि नितरा मेरौ ततो नाधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणा वृत्ति वृथा मा कृथा
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्य जलम् ॥२४॥
गीत कोकिल ते मुदा रसविद शृण्वति कर्णामृत
नो किंचिद्वितरीत त तदुदरे स्वय जीवसि ।
कर्णायुर्हरमुद्गिरन्ति विरुत काकास्तु तेभ्यो बलि
प्रज्ञा एव दिशति हत धिगिद तस्त्र विधे क्रीडितम् ॥२५॥
लब्ध जन्म सह श्रिया स्वयमपि त्रैलोक्यभूषाकर
श्चिन्त्यार्थ परमेश्वराभ्युपगतस्तत्रापि मूर्ध्ना धृत ।
वृद्धिं शीतकरस्तथापि न गत क्षीण पर प्रत्युत
प्राय प्राक्तनमेव कर्म बलवत् क कस्य कर्तुं क्षम ॥२६॥
कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांश्चित्पातविधौ करोति च पुन कांश्चिन्नयत्याकुलान् ।
अन्योन्यप्रतिपक्षसहतिमिमा लोकस्थिति बोधय
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधि ॥ २७ ॥

इत्यप्रार्थितदायकस्त्रिभुवने दीपोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावध्येस्थया स्थीयते ॥ २९ ॥
अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ ३० ॥
यत्कीर्त्या धवलीकृतं त्रिभुवनं सूर्या समुन्मीलितं
भक्त्यैवाः परितोषिताः सुचरितैरानन्दिता सज्जनाः
पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचका-
स्तस्मै सर्वगुणाश्रयाय भवते दीर्घायुराशास्महे ॥ ३१ ॥
अर्धं दानववैरिणा गिरिजयाप्यर्धं हरस्याहृतं
देवेत्थं भुवनत्रये स्मरहराभावे समुन्मीलति ।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ ३२ ॥
महाराज श्रीमञ्जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं सुरपतिरपि स्वं करिवरं
कलानाथं राहुः कमलभवनो हंसमधुना ॥ ३३ ॥

---

## XXIV.

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
धृष्टः पार्श्वे वसति च सदा दूरतश्चाप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १ ॥
भक्तानामुपकारिणा परहितव्यापारयुक्तात्मना
सेवासम्व्यवहारतत्त्वविदुषा द्रोहच्युतानामपि ।

व्यापन्ने स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादप्युपतेरिवावनिपतेः सेवा सदा शङ्किनी ॥ २ ॥
फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ ३ ॥
नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ ४ ॥
सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं प्राभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ५ ॥
एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यात्स्पृहया स राज्यमथवा प्राणानपि च्यावयेत् ॥ ६ ॥
वर्धते क्षीणवित्तस्य क्षीणत्वमपि शोभते
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥ ७ ॥
कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ ८ ॥
पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः ।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ९ ॥
शत्रुर्नापि मया त्वनेन विदुषा प्राग्वत्सखा शत्रुणा
या रक्ष्य मदु न ……भिमे मुक्तोऽपि पात्रं जने ।

दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन किं
भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिता. ॥ १० ॥
येनास्यभ्युदितेन चंद्र गमितः क्लांतिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ ११ ॥
तवैव प्रावीण्यं जलद जगदानंदकरणं
' यदंभःपालीराहरसि खलसत्त्वाज्जलनिधेः ।
निसर्गात्क्षारास्ता नयसि च कथंचिन्मधुरता-
मथासारैस्तासां यगुपदुपकर्त्तासि जगतः ॥ १२ ॥
दृष्ट्वा स्फीतोऽभवदलिरसौ लेल्यपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन्निष्पपात ।
नास्मिन्गंधो न च मधुकणा नास्ति तत्सौकुमार्यं
घूर्णन्मूर्ध्ना बत नतशिरा व्रीडया निर्जगाम ॥ १३ ॥
भ्रातः कोकिल कूजितेन किमलं नाप्यनर्घो गुण-
स्तूष्णीं तिष्ठ निशीर्णपर्णपटलच्छन्नः कचित्कोटरे ।
प्रोद्दामद्रुमसंकटे कटुरटत्काकावलीसंकुलः
कालोऽयं शिशिरस्य संप्रति सखे नायं वसंतोत्सवः ॥ १४ ॥
अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नंति ये
भ्रातश्चातक किं वृथा विरुदितैः खिन्नोऽसि विश्राम्यताम् ।
मेघः शारद एव काशधवलः पानीयरिक्तोदरो
गर्जत्येव हि केवलं भृशतरं नो बिंदुमप्युज्झति ॥ १५ ॥
मातंगाः किमु वल्गितैः किमफलैराडंबरैर्जंबुकाः
सारंगा महिषा पदं व्रजथ किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारे पुरः

सिधुध्यानीति हुकृते स्फुरति यत्तद्गर्जित गर्जितम् ॥ १६ ॥
पीत यत्र हिम पय कवलिता यस्मिन्मृणालाङ्कुरा
स्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्त श्रम
धिक्तस्यैव जलानि पंकिलयत पाथोजिनीं मथ्नतो
मूलान्युत्खनत करींद्र भवतो लज्जापि नो जायते ॥ १७ ॥
अल्पायासवलेन यत्र पतन दृष्ट्वा न यत्रोन्नति
र्दूरे वेत्रलतावितानगहन कष्टप्रवेशक्रम ।
हे सारग मनोरमा वनभुवस्त्यक्त्वा विशेषार्थिना
किं भूभृत्कटकास्थितिव्यसनिना व्यर्थं खुरा शातिता ॥ १८॥
यद्वक्त्र मुहुरीक्षसे न धनिना ब्रूषे न चाटून्मृषा
नैषा गर्वगिर शृणोषि न च तान्प्रत्याशया धावसि ।
काले बालतृणानि खादसि पर निद्रासि निद्रागमे
तन्मे ब्रूहि कुरग कुत्र भवता किनाम तप्त तप ॥ १९ ॥
य पूर्वं परिपालिता फलभरच्छायादिभि प्राणिनो
विश्रामद्रुम कथ्यता तव विपत्काले क ते साप्रतम् ।
एता संगतिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचो
यासा छेदनमंतरेण पतितो नाथ कुठारस्त्वयि ॥ २० ॥
येभिज्ञा कुसुमोद्गमादनुदिन त्वामाश्रिता षट्पदा
स्ते भ्राम्यति फलाद्बहिर्बहिरहो दृष्ट्वा न सभाषसे ।
ये कीरास्तव दृक्पथ न च गतास्ते त्वत्फलाभ्यतरे
धिक्त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥ २१ ॥
आकर्ण्याम्रफलस्तुतिं जलमभूत्तन्नारिकेलांतर
प्राप कटकित तथैव पनस जात द्विधा दाडिमम् ।
आलीनोभ्रमरैस्तु पादपमरु द्राक्षाफल क्षुद्रता
श्यामत्व च जांबव गतमहो मात्सर्यदोषादिद ॥ २२ ॥

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न छायापि परोपकारकृतये मार्गस्थितस्यापि मे ॥२३॥
परार्थे यः पीडामनुभवति भंगेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥ २४ ॥
न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रांतं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ २५ ॥
आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा ।
एते तस्मिन्निवृत्ताः पुनरितरककुप्प्रांतपर्यस्तबिंबे
प्रायो भृत्यास्त्यजंति प्रचलितविभवं स्वामिनं सेवमानाः॥२६॥
अजानन्माहात्म्यं पततु शलभो दीपदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानंतोऽप्येते वयमिह विपज्जालजटिला-
न्न मुंचामः कामानहह गहनो मोहमहिमा ॥ २७ ॥
परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा
प्रसादं किं नेतुं विशसि हृदय क्लेशकलितम् ।
प्रसन्ने त्वय्यंतः स्वयमुदितचिंतामणिगुणे
विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ २८ ॥
अमीषां प्राणानां तुलितबिसिनीपत्रपयसां

कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसञ्ज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ २९ ॥

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः कल्या भुवनफलके क्रीडति प्राणिशारैः ॥ ३० ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् ।
लोला यौवनलालसा तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ ३१ ॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ३२ ॥

उदन्वच्छन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ३३ ॥

# तृतीयावलिः

## THIRD SERIES

---

### I

#### The hare and the lion

अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः। स च सर्वदा पशूनां वधं कुर्वन्नास्ते। ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः। मृगेन्द्र किमर्थमेकदा बहुपशुघातः क्रियते। यदि प्रसादो भवति तदा वयमेव भवदाहाराय प्रत्यहमेकैकं पशुमुपढौकयामः। ततः सिंहेनोक्तम्। यद्येतदभिमतं भवतां तर्हि भवतु तत्। ततः प्रभृत्येकैकं पशुमुपकल्पितं भक्षयन्नास्ते। अथ कदाचिद्वृद्धशशकस्य वारः समायातः। सोऽचिन्तयत्। पञ्चत्वं गमिष्यामि तर्हि किं मे सिंहानुनयेन। तन्मन्दं मन्दं गच्छामि। ततः सिंहोऽपि क्षुधापीडितः कोपात्तमुवाच। कुतस्त्वं विलम्ब्य समागतोऽसि। शशकोऽब्रवीत्। देव नाहमपराधी। आगच्छन्पथि सिंहान्तरेण बलाद्धृतः। तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतोऽस्मि। सिंहः सकोपमाह। सत्वरं गत्वा दुरात्मानं दर्शय क्व स दुरात्मा तिष्ठति। ततः शशकस्तं गृहीत्वा गभीरकूपं दर्शयितुं गतः। तत्रागत्य स्वयमेव पश्यतु स्वामी। इत्युक्त्वा तस्मिन्कूपजले तस्य सिंहस्यैव प्रतिबिम्बं दर्शितवान्। ततोऽसौ क्रोधाध्मातो दर्पात्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः। अतोऽहं ब्रवीमि।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः॥ १॥

Hitopadesa II.

---

## II

### The crane and the crab

अस्ति कस्मिंश्चित्प्रदेशे नानाजलचरसनाथं सरः । तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान्व्यापादयितुमसमर्थः ततश्च क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो मुक्ताफलसदृशैरश्रुप्रवाहैर्धरातलमभिषिंचन्रुरोद । एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे । माम किमद्य त्वयाहारवृत्तिर्नानुष्ठीयते । केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते । स आह । वत्स सत्यमुपलक्षितं भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया साम्प्रतं प्रायोपवेशनं कृतं तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि । कुलीरकस्तच्छ्रुत्वा प्राह । किं तद्वैराग्यकारणम् । स प्राह । वत्स अहमस्मिन्सरसि जातो वृद्धिं गतश्च । तन्मयैतच्छ्रुतं यद् द्वादशवार्षिक्यनावृष्टिः संपद्यते लग्ना । कुलीरक आह । कस्मात्तच्छ्रुतम् । बक आह । दैवज्ञमुखात् । यत शनैश्चरो रोहिणीशकटं भित्त्वा भौमश्च शुक्रश्च प्रयास्यति । तदेतत्सरः स्वल्पतोयं वर्तते शीघ्रं शोषं यास्यति । अस्मिञ्शुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्च ते सर्वे तोयाभावान्नाशं यास्यन्ति । तत्तेषां वियोगं द्रष्टुमहमसमर्थः । तेनेदं प्रायोपवेशनं कृतम् । साम्प्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते । केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति । अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति । तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति । ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास । अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयस्तमभ्युपेत्य पप्रच्छुः । माम अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति । बक आह । अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलस-

नाथ सर पद्मिनीखण्डमंडित यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेति। तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि। अथ ते तत्र विश्वासमापन्नास्तात मातुल भ्रातरिति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समन्तात्परितस्थुः। सोपि दुष्टाशयः क्रमेण तान्पृष्ठमारोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासंदेशकैर्मनांसि रञ्जयन्नित्यमेवाहारवृत्तिमकरोत्। अन्यस्मिन्दिने स कुलीरकेणोक्तः। माम मया सह न प्रथमः स्नेहसंभाषः संजातः। तत्किं मां परित्यज्यान्यान्नयसि। तस्मादद्य मे प्राणत्राणं कुरु। तदाकर्ण्य सोपि दुष्टाशयश्चिन्तितवान्। निर्विण्णोहं मत्स्यमांसादनेन। तदद्यैनं कुलीरकं व्यञ्जनस्थाने करोमि। इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः। कुलीरकोपि दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्। माम कियद्दूरे स जलाशयः। मदीयभारेणातिश्रान्तस्त्वं तत्कथय। सोपि मन्दधीर्जलचरोयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह। कुलीरक कुतोन्यो जलाशयः। मम प्राणयात्रेयम्। तस्मात्स्मर्यतामात्मनोभीष्टदेवता। त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि। इत्युक्तवति तस्मिन्स्ववदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च। अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद। ततः सर्वैरेव जलचरैः पृष्टः। भो कुलीरक किंनिमित्तस्त्वं पश्चादायातः। कुशलकारणं तिष्ठति। स मातुलोपि नायातः। तत्किं चिरयति। वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः। एवं तैरभिहिते कुलीरकोपि विहस्योवाच। मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः। तन्मयायुःशेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा

प्रार्थ्येयमानीता । तदलं सम्भ्रमेण । अधुना सर्वजलचराणां क्षेमं भविष्यति । अतोऽहं ब्रवीमि ।

भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥ १ ॥

Panchatantra I

---

## III

## The tale of Savitri

### Part I

पुरा किल मद्रेष्वश्वपतिर्नाम राजा बभूव । धर्मात्मा ब्रह्मण्यः शरण्यः सत्यसंधो जितेन्द्रियो यज्वा पौरजानपदप्रियः सर्वभूतहितरतश्चासीत् । किंत्वनपत्यः । तस्मात्सोऽपत्योत्पादनार्थं तीव्रनियममास्थाय सावित्रीं देवतामाराधयामास । अथ कस्मिंश्चित्काले गते तस्य ज्येष्ठा महिषी गर्भमादधे । प्राप्ते काले च वरां कन्यां सुषुवे । सा सावित्र्या प्रीतया दत्तेति पिता विप्राश्च तस्याः सावित्रीत्येव नाम चक्रुः । सा नृपात्मजा विग्रहवती श्रीरिव वर्धमाना गच्छता कालेन यौवनस्था बभूव । तां काञ्चनीं प्रतिमामिव तेजसा ज्वलन्तीं दृष्ट्वा सर्वे जना देवकन्येयं प्राप्तेति मेनिरे । तस्यास्तेजसा प्रतिवारितश्च न कोऽपि तां वरयामास । तां यौवनस्थामपि नृपतिभिरयाच्यमानां दृष्ट्वा पिता परमदुःखितोऽभवत् । तामाहूयोवाच च । पुत्रि प्रदानकालस्तेऽयम् । न च कश्चित्त्वां वृणोति । तस्माद् गुणैरात्मनः सदृशं भर्तारं स्वयमन्विच्छेति । सा तथेति पितुर्वचनमादाय सचिवैर्युता हैमं रथमास्थाय राजर्षीणां तपोवनानि जगाम । सर्वाणि तीर्थान्याश्रमांश्चाभिगम्य पितुर्वेश्म निववृते । तदा स सभामध्ये भगवता नारदेन सह कथायोगेनोपविष्ट आसीत् । तां तथायातां दृष्ट्वा नारदोऽश्वपतिं पप्रच्छ । क्व तवेयं सुता गता कुतश्चागता किमर्थं च । त्वमिमां भर्त्रे नाद्यापि प्रयच्छसीति । अश्वपतिः प्रोवाच । इयं मद्वचनेनैव कार्येण प्रेषितायेना

गता यो भर्तानया वृतस्तं भगवान् श्रोतुमर्हति । इत्युक्त्वा विस्तरेण ब्रूहीति कन्यामादिदेश । एवमादिष्टा सा प्रत्युवाच । आसीच्छाल्वेषु द्युमत्सेनो नाम पृथिवीपतिः । स कालेनान्धो बभूव । विनष्टचक्षुषो बालपुत्रस्य तस्य राज्यं पूर्ववैरिणा छिद्रेऽस्मिन् हृतम् । ततोऽसौ महारण्यं प्रविश्यतत्तपोवनं च गत्वा तपस्तेपे । तस्य राज्ञः पुत्रस्तपोवने संवृद्धः सत्यवाननुरूपो मे भर्तेति मनसा वृत इति । नारदस्तु तद्वचः श्रुत्वा प्राह । अहो बत महत्पापं सावित्र्या कृतं यदनया गुणवानपि सत्यवान्वृतः । अश्वपतिः प्राह भगवन् किं तत्पापम् । नारदः प्रत्युवाच । असौ सर्वगुणोपेतः । किंतु गुणानाक्रम्यैक एवास्य दोषोऽस्तीति । स च प्रयत्नेनापि नातिवर्तितुं शक्यम् । दोषस्त्वयमेव यदद्य प्रभृति संवत्सरेणायं क्षीणायुर्भूत्वा देहत्यागं करिष्यतीति । नारदस्य वचः श्रुत्वाश्वपतिः सावित्रीमाह । गच्छ त्वमन्यं भर्तारं वरय यतः सत्यवति महानयं दोषः । सावित्री प्राह । सकृदंशो निपतति सकृत्कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सकृत्सताम् । अतो दीर्घायुरल्पायुर्वा सगुणो निर्गुणो वा सकृन्मया भर्ता वृतो नाहमधुना द्वितीयं वृणोमीति । तच्छ्रुत्वा नारदः प्रोवाच । अश्वपते तव दुहितुः स्थिरैव बुद्धिः । तस्मात्सत्यवतेऽस्याः प्रदानमेव मे रोचते । एवमुक्त्वा नारदस्त्रिदिवं गतः । राजापि दुहितुः सर्वं वैवाहिकं कारयित्वा द्युमत्सेनाश्रमं कन्यया द्विजैश्च सार्धं पद्भ्यामेव जगाम । गत्वा च सावित्रीं मे कन्यकां स्नुषार्थे गृहाणेति द्युमत्सेनमुवाच । द्युमत्सेन आह । वयं राज्याच्च्युता वनवासमाश्रितास्तपस्विनो भूत्वा धर्मं चराम । कथं नामेयं तव सुता वनवासक्लेशं सहिष्यते । किंतु भूयो भूयोऽश्वपतिनानुरुध्यमानो द्युमत्सेनस्तत्प्रणयमङ्गीचकार । ततोऽखिलाश्रमवासिनो द्विजानाहूय नृपौ तौ यथाविधि समुद्वाहं कारयामासतुः । अश्वपतिः कन्यां यथार्हं परिच्छदं च दत्त्वा परमया मुदा

युक्त स्वभवन ययौ । सत्यवानपि ता सर्वगुणान्विता भार्या लब्ध्वा मुमुदे । सापि मनसेप्सित भर्तार प्राप्य पर सतोषमनुबभूव । गते पितरि सा सर्वाण्याभरणानि सन्यस्य वल्कलानि काषाय वस्त्र च जगृहे । शुश्रूषातत्परतया च न केवल भर्तृगुरूणामपि तुष्टिमावहत् । एव तत्र तेषा निवसता बहुतिथे काले व्यतीते यदा सत्यवता मर्तव्य स काल उपस्थित । भामिनी सावित्री नारदोक्तान् दिवसान् गणयित्वा चतुर्थेऽहनि सत्यवता मर्तव्यमिति सचिन्त्य त्रिरात्र व्रतमुद्दिश्य दिवारात्र स्थिताभवत् । तस्या व्रताचरणनिश्चय श्रुत्वा द्युमत्सेनस्तस्मात्ता व्यावर्तयितुमियेष । किंतु सावित्र्युवाच । तात न सताप कार्य । अह व्रत पारयिष्यामि । व्यवसायकृत हीद व्यवसायश्च कारणमिति । एवमुक्त श्वशुरस्तामनुजज्ञे । अथ भर्तृमरणदिवसे प्राप्ते प्रातरुत्थाय हुताशन हुत्वा सर्वान् द्विजान् वृद्धाञ् श्वश्रू श्वशुर चाभिवाद्य सर्वेषामवैधव्याशिष प्रत्यग्रहीत् । अनतर द्युमत्सेनस्तामाह । त्वया यथोद्दिष्ट व्रत पारितमधुनाहारकाल सप्राप्त । सावित्र्योक्तम् । अस्त गत आदित्ये भोक्तव्यमिति मे सकल्प । एव सभाषमाणाया सावित्र्या सत्यवान्स्कन्धे परशुमादाय काष्ठान्याहर्तु वन प्रस्थित । त च सावित्र्यनुगन्तुकामा तेन निषिध्यमानापि ध्रुवेच्छाभूत् । तत सत्यवानाह । यदि ते गमनोत्साहस्तव प्रिय करिष्यामि । किंतु मम गुरूनामन्त्रयस्व नौ चेन्मामय दोष स्पृशेत् । एवमुक्ता सा श्वश्रू श्वशुर च गत्वोवाच । आर्यपार्येण चाभ्यनुज्ञातानेन सह वन गतुमिच्छामि । कुसुमित वन द्रष्टु पर हि मे कौतूहलमिति । ततोऽनुज्ञा लब्ध्वा भर्त्रा सह सा वन प्रतस्थे ।

Mahábharata

## IV

### The tale of Savitri

### Part II

तौ दपती विचित्राणि वनानि पुण्यवहा नदी पुष्पिताश्च नगो-
त्तमान् दृष्ट्वा परा मुदमवापतु । अथ सत्यवान्फलान्यादाय काष्ठानि
पाटयामास । तच्छ्रमेणास्य शिरसि वेदना जज्ञे । अत स प्रियाम-
भिगम्याह । अस्वस्थमिवात्मान लक्षये तत्स्वपितुमिच्छामि न मे स्थातु
शक्तिरिति । पतिवाक्यपरायणा सा क्रोडोत्सङ्गेऽस्य शिर कृत्वा भू-
तले निषसाद । अथ सा मुहूर्तादेव रक्तवासस बद्धमौलिमादित्यसम-
तेजस श्यामावदात रक्ताक्ष पाशहस्त भयावह पुरुष सत्यवत पार्श्वे
स्थितमपश्यत् । त तथाविधमवलोक्य सावित्री प्राह । दैवत त्वामभि-
जानामि । वपुरेतदमानुषम् । कस्त्व किं चिकीर्षसि चेति मा ब्रूहि ।
अह यम क्षीणायुष सत्यवत प्राणानपहर्तुकाम इत्युक्त्वा यमस्त-
स्य कायात्पाशबद्ध वशगतमङ्गुष्ठमात्र पुरुष बलान्निश्चकर्ष दक्षिणा-
मुख प्रतस्थे च । सावित्र्यपि दु खार्ता तमेवानुगन्तुमारब्धा । तामवलो-
क्य यम प्राह । निवर्तस्व सावित्रि कुरुष्वास्यौर्ध्वदेहिक कृत भर्तु-
स्त्वयानृण्य यावद्गम्य गत त्वयेति । तत उभयोरेवविध सवाद
प्रचक्रमे ।

सावित्र्युवाच.

यत्र मे नीयते भर्ता स्वय वा यत्र गच्छति ।
मयापि तत्र गन्तव्यमेष धर्म सनातन ॥
प्राहु साप्तपद मैत्र बुधास्तत्त्वार्थदर्शिन ।
मित्रता च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥
नानात्मवतो हि वने चरति धर्म च वास च परिश्रम च ।
विज्ञानतो धर्ममुदाहरति तस्मात्सतो धर्ममाहु प्रधानम् ॥

यम उवाच.

निवर्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवितं ददानि ते सर्वमनिन्दिते वरम् ।

सावित्र्युवाच.

च्युतः स्वराज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसंनिभः ॥

यम उवाच.

ददानि ते सर्वमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वनि ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत् ॥

सावित्र्युवाच,

कुतः श्रमो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे ।
सतां सकृत्संगतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण संगतं ततः सतां संनिवसेत्समागमे ॥

यम उवाच ।

मनोनुकूलं बुधबुद्धिवर्धनं त्वयेदमुक्तं वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भाविनि ॥

सावित्र्युवाच ।

हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः ।
न च स्वधर्मं प्रजहातु मे गुरुर्द्वितीयमेतद्वरयामि ते वरम् ॥

यम उवाच ।

स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात्परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् ॥

सावित्र्युवाच ।

प्रजास्त्वयैताः नियमेन संयता नियम्य चैता नयसे निकामया ।
अतो यमत्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया ॥
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥

यम उवाच ।

पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदीच्छसि ॥

सावित्र्युवाच ।

ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् ॥
कुलस्य संतानकरं च यद्भवेत्तृतीयमेतं वरयामि ते वरम् ॥

यम उवाच ।

कुलस्य संतानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥

सावित्र्युवाच ।

न दूरमेतन्मम भर्तृसंनिधौ मनो हि मे दूरतरं प्रधावति ।
अथ व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एव च ॥
विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः ।
समेन धर्मेण च रंजिताः प्रजास्ततस्तवेहेश्वर धर्मराजता ॥
आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥

यम उवाच ।

उदाहृतं ते वचनं यदंगने शुभे न तादृक् त्वदृते मया श्रुतम् ।
अनेन तुष्टोऽस्मि विनास्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ॥

तेति द्युमत्सेनेोपि राज्ञा सावित्र्या सुतेन चानुगतो नगर प्राप्य-सिंहासनमारूढ सत्यवानपि यावराज्येभिषिक्त । अथ गच्छता कालेन सावित्री पुत्रशत सुषुवे । तस्या पितापिपुत्रशत प्राप । एव चामा माता पिता श्वश्रू श्वशुरो भर्तु कुलमेव सकल सावित्र्या-कृच्छ्रा समुध्दृतम् ।

Mahabharata

V

Know thyself

मूढ जहीहि धनागमतृष्णा कुरु तनुबुद्धे मनसि वितृष्णाम् ।
यल्लभसे निजकर्मोपात्त वित्त तेन विनोदय चित्तम् ॥ १ ॥
अर्थमनर्थं भावय नित्य नास्ति तत सुखलेश सत्यम् ।
पुत्रादपि धनभाजा भीति सर्वत्रैषा विहिता रीति ॥ २ ॥
का तव कान्ता कस्ते पुत्र ससारोऽयमतीव विचित्र ।
कस्य त्व वा कुत आयातस्तत्त्व चिंतय तदिद भ्रात ॥ ३ ॥
मा कुरु धनजनयौवनगर्वं हरति निमेषात्काल सर्वम् ।
मायामयमिदमखिल हित्वा ब्रह्मपद प्रविशाशु विदित्वा ॥ ४ ॥
नलिनीदलगतजलमतितरल तद्वज्जीवितमतिशयचपलम् ।
विद्धि व्याधिव्यालग्रस्त लोक शोकहत च समस्तम् ॥ ५ ॥
तत्त्व चिंतय सतत चित्ते परिहर चिंता नश्वरवित्ते ।
क्षणमिह सज्जनसगतिरेका भवति भवार्णवतरणे नौका ॥ ६ ॥
यावद्वित्तोपार्जनशक्तस्तावन्निजपरिवारो रक्त ।
तदनु च जरया जर्जरदेहे वार्ता कोपि न पृच्छति गेहे ॥ ७ ॥
काम क्रोध लोभ मोह त्यक्त्वात्मान पश्य हि कोहम् ।
आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढा ॥ ८ ॥
सुरमंदिरतरुमूलनिवास शय्या भूतलमजिन वास ।
सर्वपरिग्रहभोगत्याग कस्य सुख न करोति विराग ॥ ९ ॥

बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः ।
वृद्धस्तावच्चिंतामग्नः परमे ब्रह्मणि कोऽपि न लग्नः ॥ १० ॥
शत्रौ मित्रे पुत्रे बंधौ मा कुरु यत्नं विग्रहसंधौ ।
भव समचित्तः सर्वत्र त्वं वांछस्यचिराद्यदि विष्णुत्वम् ॥ ११ ॥
यावज्जननं तावन्मरणं तावज्जननीजठरे शयनम् ।
इति संसारे स्फुटतरदोषः कथमिह मानव तव संतोषः ॥ १२ ॥
दिनयामिन्यौ सायं प्रातः शिशिरवसंतौ पुनरायातः ।
कालः क्रीडति गच्छत्यायुस्तदपि न मुंचत्याशावायुः ॥ १३ ॥
अंगं गलितं पलितं मुंडं दंतविहीनं जातं तुंडम् ।
करधृतकंपितशोभितदंडं तदपि न मुंचत्याशापिंडम् ॥ १४ ॥
त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि मय्यसहिष्णुः ।
सर्वं पश्यात्मन्यात्मानं सर्वत्रोत्सृज भेदज्ञानम् ॥ १५ ॥

Mohamudgara.

---

## VI.

### Repudiation of Sakuntalá by Dushyanta.

#### Part I.

**पुरोहितः** ( पुरो गत्वा ) । एते विधिवदर्चितास्तपस्विनः । काश्चिदेषामुपाध्यायसंदेशः । त देवः श्रोतुमर्हति ।

**राजा** । अवहितोस्मि ।

**ऋषयः** ( हस्तानुद्यम्य ) विजयस्व राजन् ।

**राजा** । सर्वानभिवादये ।

**ऋषयः** । इष्टेन युज्यस्व ।

**राजा** । अपि निर्विघ्नतपसो मुनयः ।

**ऋषयः** ।

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १ ॥

**राजा** । अर्थवान्खलु मे राजशब्दः । अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ।

**ऋषयः** । स्वाधीनकुशलाः सिद्धिमंतः । स भवंतमनामयप्रश्नपूर्वकमिदमाह ।

**राजा** । किमाज्ञापयति भगवान् ।

**शार्ङ्गरवः** । यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ।

त्वमर्हतां प्राग्रसरः स्मृतोसि नः
शकुंतला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ २ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी** । आर्य किमपि वक्तुकामास्मि । न मे वचनावसरोस्ति । कथमिति ।

नापेक्षितो गुरुजनोनया न त्वयापि पृष्टो बंधुः ।
एकैकमेव चरिते किं भणतु एक एकस्य ॥ ३ ॥

**शकुंतला** । ( आत्मगतम् ) किं नु खल्वार्यपुत्रो भणति ।

**राजा** । किमिदमुपन्यस्तम् ।

**शकुंतला** । ( आत्मगतम् ) । पावकः खल्वेष वचनोपन्यासः ।

**शार्ङ्गरवः** । कथमिदं नाम । भवत एव सुतरां लोकवृत्तांतनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोन्यथा भर्तृमतीं विशंकते ।
अतः समीपे परिणेतुरिष्यते
तदप्रियापि प्रमदा स्वबंधुभिः ॥ ४ ॥

राजा । किं चात्रभवती मया परिणीतपूर्वा ।

शकु. ( सविषादम् । आत्मगतम् ) । हृदय सांप्रतं ते आशङ्का ।

शार्ङ्गरवः ।

किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः ।

राजा । कुतोऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्गरवः ।

मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ ५ ॥

राजा । विशेषेणाधिक्षिप्तोऽस्मि ।

गौतमी । जाते । मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति । ( इति यथोक्तं करोति । )

राजा । ( शकुन्तलां निर्वर्ण्य । आत्मगतम् । )

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यध्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न खलु च परिभोक्तुं नैव शक्नोमि हातुम् ॥ ६ ॥

( इति विचारयन्स्थितः )

प्रतीहारी । अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं प्रेक्ष्य कोऽन्यो विचारयति ।

शार्ङ्गरवः । भो राजन् । किमिति जोषमास्यते ।

राजा । भोस्तपोधनाः । चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

शकु. ( अपवार्य ) । आर्यपुत्रस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा ।

शार्ङ्गरवः । मा तावत् ।

कृताभिमर्षामनुमन्यमान

सुतां त्वया नाम मुनिर्विमान्यः ।

मुष्टं प्रतिग्राहयता स्वमर्थं

पात्रीकृतो दस्युरिवासि येन ॥ ७ ॥

**शारद्वत** । शार्ङ्गरव । विरम त्वमिदानीम् । शकुन्तले वक्तव्यमुक्तमस्माभिः । सोयमत्रभवानेवमाह । दीयतामस्य प्रत्ययप्रतिवचनम् ।

**शकु.** ( अपवार्य ) । इदमवस्थान्तरं गते तादृशेनुरागे किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसितम् । ( प्रकाशम् ) आर्यपुत्र–( इत्यर्धोक्ते । ) संशयित इदानीं परिणये नैष समुदाचारः । पौरव । न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम् ।

**राजा** । ( कर्णौ पिधाय ) । शान्तं पापम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।

कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ ८ ॥

**शकु.** । भवतु । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।

**राजा** । उदारः कल्पः ।

**शकु.** ( मुद्रास्थानं परामृश्य ) । हा धिक् हा धिक् । अङ्गुलीयकशून्या मेङ्गुलिः । ( इति सविषादं गौतमीमवेक्षते । )

**गौतमी** । नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

**राजा** ( सस्मितम् ) । इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

**शकु.** । अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

**राजा** । श्रोतव्यमिदानीं संवृत्तम् ।

## VII

### Repudiation of Sakuntalā by Dushyanta.

#### Part II.

शकुन्तला । नन्वेकदिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

राजा । शृणुमस्तावत् ।

शकुं. तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनरपरिचयाद्धस्ताभ्यासमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि । सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति ।

राजा । एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

गौतमी । महाभाग । नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ।

राजा । तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ ९ ॥

शकुं. ( सरोषम् ) अनार्य आत्मनो हृदयानुमानेन प्रेक्षसे । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

राजा । ( आत्मगतम् ) । संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ १० ॥

( प्रकाशम् ) । भद्रे । प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये।

शकु । सुष्टु तावदत्र स्वच्छन्दचारिणी कृतास्मि । याहमस्य पुरुवंशप्रत्ययेन मुखमधोहृदयस्थितविषस्य हस्ताभ्यासमुपगता । ( इति पटान्तेन मुखमावृत्य रोदिति । )

शार्ङ्गरव । इत्यमात्मकृतमप्रतिहतं चापलं दहति।
अतः परीक्ष्य कर्तव्यं विशेषात् संगतं रहः
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ ११ ॥

राजा । अयि भोः किमत्रभवतीप्रत्ययादेवास्मान् संभृतदोषैरधिक्षिपथ।

शार्ङ्गरव । ( सासूयम् ) श्रुतं भवद्भिरधरोत्तरम् ।
आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ ११ ॥

राजा । भोः सत्यवादिन् । अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ।

शार्ङ्गरव । विनिपातः ।

राजा । विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत् ।

शारद्वतः शार्ङ्गरव । किमुत्तरेण । अनुष्ठितो गुरोः संदेशः प्रतिनिवर्तामहे वयम् । ( राजानं प्रति । )
तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ १३ ॥

गौतमि गच्छाग्रत ।

( इति प्रस्थिता ।)

शकु॰ । कथमनेन कितवेन विप्रलब्धास्मि । यूयमपि मा परिदेविनीं परित्यजथ । ( इत्यनुप्रतिष्ठते । )

गौतमी । ( स्थित्वा । ) वत्स शार्ङ्गरव । अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्री करिष्यति ।

शार्ङ्गरव (सरोष निवृत्य) । किं पुरोभागिनि स्वातन्त्र्यमवलम्बसे ।

( शकुन्तला भीता वेपते । )

शार्ङ्गरव । शकुन्तले ।

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ १४ ॥

तिष्ठ । साधयामो वयम् ।

राजा । भोस्तपस्विन् । किमत्रभवतीं विप्रलभसे । कुतः ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ १५ ॥

शार्ङ्गरव । यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवान् तदा कथमधर्मभीरुः ।

राजा । भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ १६ ॥

पुरोहितः । ( विचार्य ) यदि तावदेवं क्रियताम् ।

राजा । अनुशास्तु मां भवान् ।

पुरोहितः । अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु । कुत इद मुच्यत इति चेत् त्वं साधुभिरुद्दिष्टः । प्रथममेव चक्रवर्तिनं पुत्रं ज नयिष्यसी । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति अभिनंद शुद्धांतमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थि तमेव ।

राजा । यथा गुरुभ्यो रोचते ।

पुरोहितः वत्से । अनुगच्छ माम्

शकुं. । भगवति वसुधे देहि मे विवरम् । (इति रुदती प्रस्थिता।

Sákuntala V.

## VIII.

### Ayodhya and its subjects &c

कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ १ ॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेंद्रेण या पुरी निर्मिता स्वयम् ॥ २ ॥
आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ३ ॥
राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ४ ॥
तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवि देवपतिर्यथा ॥ ५ ॥
कपाटतोरणवतीं सुविभक्तांतरापणाम् ।
सर्वयंत्रायुधवतीमुषितां सर्वशिल्पिभिः ॥ ६ ॥
दुर्गगंभीरपरिखां दुर्गामन्यैर्दुरासदाम् ।
वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ ७ ॥

